**सुरासीध्वोः पिबतेः ॥ ५९४ ॥** सुरासीध्वोरुपपदयोः पिबतेष्टश्च भवति । सुरापी । सीधुपी ।

**हृञोऽच् वयोऽनुद्यमनयोः ॥ ५९५ ॥** कर्मण्युपपदे हरतेरच् भवति वयसि अनुद्यमने गम्यमाने । ऊर्ध्वं नयनमुद्यमनं ततोऽन्यदनुद्यमनं । कवचहरः क्षत्रियकुमारः ।

**आङि ताच्छील्ये ॥ ५९६ ॥** कर्मण्याङि चोपपदे ताच्छील्यार्थे हरतेरच् भवति । पुष्पाणि आहर्तुं शीलमस्य पुष्पाहरो विद्याधरः ।

**अर्हश्च ॥ ५९७ ॥** कर्मण्युपपदे अर्हतेरच भवति । पूजामर्हतीति पूजार्हः ।

**धृञः प्रहरणे चादण्डसूत्रयोः ॥ ५९८ ॥** दण्डसूत्रवर्जिते प्रहरणवाचके उपपदे धृञोऽच् भवति । वज्रधरः । चक्रधरः । अदण्डसूत्रयोरिति किं । दण्डधारः । सूत्रधारः ।

**धनुर्दण्डत्सरुलाङ्गलाङ्कुशयष्टितोमरेषु ग्रहर्वा ॥ ५९९ ॥** एषूपपदेषु ग्रहेरज्वा भवति । धनुर्ग्रहः धनुर्ग्राहः । दण्डग्रहः । दण्डग्राहः । त्सरुग्रहः त्सरुग्राहः । लाङ्गलग्रहः । लाङ्गलग्राहः । अङ्कुशग्रहः अङ्कुशग्राहः । यष्टिग्रहः यष्टिग्राहः । तोमरग्रहः । तोमरग्राहः ।

**स्तम्बकर्णयो रमिजपोः ॥ ६०० ॥** स्तम्बकर्णयोरुपपदयोरमिजपिभ्यामज् भवति । स्तम्बेरमो हस्ती । कर्णेजपः पिशुनः ।

**शंपूर्वेभ्यः सञ्ज्ञायाम् ॥ ६०१ ॥** शंपूर्वेभ्यो धातुभ्यः संज्ञायामच् भवति । शं करोति इति शंकरः । शंभवः । शंवदः ।

**शीङोऽधिकरणे च ॥ ६०२ ॥** अधिकरणे च नाम्नि उपपदे शेतेरज् भवति । खे शेते खशयः । चकारात् —

**पार्श्वपृष्ठादौ करणे ॥ ६०३ ॥** पार्श्वपृष्ठादौ करणे उपपदे शीङ

अञ् भवति । पार्श्वेन शेते पार्श्वशय । पृष्ठशय । कुब्ज ।

**चरेष्टः** ॥ ६०४ ॥ अधिकरणे नाम्नि उपपदे चरष्टो भवति । कुरुषु चरतीति कुरुचर । एवमटवीचर ।

**पुरोऽग्रतोऽग्रेषु सर्त्तेः** ॥ ६०५ ॥ एषूपपदेषु सर्तेष्टो भवति । पुरःसर । अग्रतःसर । अग्रेसर ।

**पूर्वे कर्त्तरि** ॥ ६०६ ॥ पूर्वशब्दे कर्त्र्युपपदे सर्तेष्टो भवति । पूर्वसर पूर्वसरी ।

**कृञो हेतुताच्छील्यानुलोम्येष्वशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु** ॥ ६०७ ॥ अशब्दादिषु कर्मसूपपदेषु हेतौ ताच्छील्य आनुलोम्ये कृञष्टो भवति । हेतौ यशस्करी विद्या । ताच्छील्ये श्राद्धकर । आनुलोम्ये वचनकर । अशब्दादिष्विति किं । शब्दकार । श्लोककार । कलहकार । गाथाकार । वैरकार । चाटुकार । सूत्रकार । मन्त्रकार । पदकार ।

**तदाद्यन्तानन्तकारबहुबाह्वहर्दिवाविभानिशाप्रभाभाश्चित्रकर्तृनान्दीकिंलिपिलिबिबलिभक्तिक्षेत्रजंघाधनुररुःसंख्यासु च** ॥ ६०८ ॥ तदादिषु कर्मसूपपदेषु कृञष्टो भवति । तत्करोतीति तत्कर तस्कर । रूढित्वादस्य सकार । यत्कर । आदिकर । अन्तकर । अनन्तकर । कारकर । बहुकर । बाहुकर । अहस्कर । दिवाकर । विभाकर । निशाकर । प्रभाकर । भास्कर । चित्रकर । कर्तृकर । नान्दीकर । किं करोतीति किंकर । लिपिकर । लिबिकर । बलिकर । भक्तिकर । क्षेत्रकर । जंघाकर । धनुष्कर । अरुष्कर । एककर । द्विकर । इत्यादि । चकारात् रजनीकर ।

**भृतौ कर्मशब्दे** ॥ ६०९ ॥ कर्मशब्द उपपदे कृञष्टो भवति भ-

तादर्थ्ये । कर्मकरो भृत्य. ।

इस्तम्बशकृतोः व्रीहिवत्सयोः ॥ ६१० ॥ स्तम्बशकृतोरुपपदयोः कृञ इर्भवति स्तम्बकरिः व्रीहि. । शकृत्करिः वालवत्सः ।

हरतेर्दृतिनाथयोः पशौ ॥ ६११ ॥ दृतिनाथयोरुपपदयोर्हरतेरिर्भवति पश्वर्थे । दृतिहरि नाथहरि. । पशु. ।

फलेमलरजः सुग्रहे ॥ ६१२ ॥ एषूपपदेषु ग्रहेरिर्भवति । फलेग्रहिः । मलग्रहिः । रजोग्रहिः ।

देववातयोरापेः ॥ ६१३ ॥ देववातयोरुपपदयोराप्नोतेरिर्भवति । देवान्प्राप्नोति देवापि. । वातापि ।

आत्मोदरकुक्षिषु भृञः खिः ॥ ६१४ ॥ एषु कर्मसूपपदेषु भृञः खिर्भवति । नस्तु क्वचिन् इति नलोपः ।

न्हस्वारुषोर्मोन्तः ॥ ६१५ ॥ न्हस्वान्तस्यानव्ययस्यारुषश्चोपपदस्य मकारान्तो भवति खानुबन्धे कृति परे । आत्मानं बिभर्तीति आत्मंभरिः । एवमुदरंभरिः । कुक्षिंभरिः ।

एजेः खश् ॥ ६१६ ॥ कर्मण्युपपदे एजयतेरिनन्तात् खश् भवति । एजृ कंपने । जनमेजयतीति जनमेजय· ।

शुनीस्तनमुञ्जकूलास्यपुष्पेषु धेटः ॥ ६१७ ॥ एषु कर्मसूपपदेषु धेटः खश् भवति ।

दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे ॥ ६१८ ॥ दीर्घान्तस्यानव्ययस्योपपदस्य न्हस्वो भवति खानुबन्धे कृति परे । धेट् पाने । शुनीं धयतीति शुनिंधयः । स्तनं धयतीति स्तनंधयः । मुञ्जंधयः । कूलन्धयः । आस्यन्धयः । पुष्पंधयः । शुनिन्धयी ।

नाडीकरमुष्टिपाणिनासिकासु ध्मश्च ॥ ६१९ ॥ एषु कर्मसूप-

देषु धमनेर्धेटश्च खश् भवति । नाडिन्धम । करन्धम । करन्धय । मुष्टिन्धय । मुष्टिन्धम । पाणिन्धय । पाणिन्धम । नासिकन्धम । नासिकन्धय ।

विध्वरुस्तिलेषु तुदः ॥ ६२० ॥ एषु कर्मसूपपदेषु तुद खश् भवति । विधुंतुदः ।

संयोगादेर्धुटः ॥ ६२१ ॥ संयोगादेर्धुटो लोपो भवति धुटि परे । अरुंतुदः । तिलंतुद ।

असूर्योग्रयोर्दृशः ॥ ६२२ ॥ अनयोरुपपदयोर्दृशः खश् भवति । असूर्यंपश्या राजदारा । उग्रंपश्या ।

ललाटे तपः ॥ ६२३ ॥ ललाटे उपपदे तपतेः खश् भवति । ललाटंतप ।

मितनखप्रस्थद्रोणपरिमाणेषु पचः ॥ ६२४ ॥ एषु कर्मसूपपदेषु पच खश् भवति । मितम्पचा ब्राह्मणी । नखंपचा यवागू । प्रस्थंपचा द्रोणंपचा स्थाली ।

कूल उद्रुजोद्वहोः ॥ ६२५ ॥ कूले उपपदे उद्रुजोद्वहोः खश् भवति । रुजो गंगा । कूलमुद्रुजा नदी । कूलमुद्वह समुद्र ।

वहंलिहाभ्रंलिहपरन्तपेरंमदाश्च ॥ ६२६ ॥ एते खशन्ता निपात्यन्ते । वहंलिहा गौ. । अभ्रंलिहो वायु । परंतप. खल । इरंमदा सीधु । वातान् वातमजन्तीति वातमजा । श्राद्धं जहातीति श्राद्धजहा माषाः ।

वदेः खः प्रियवशयोः ॥ ६२७ । अनयोरुपपदयोर्वदेः खो भवति । प्रियंवद । वशंवद ।

सर्वकूलाभ्रकरीषेषु कषः ॥ ६२८ । एषूपपदेषु कषतेः खो भवति । कषं सिपेति दण्डकधातु । सर्वंकष खल. । कूलंकषा नदी । अभ्रंकषो गिरिः । करीषंकषा वात्या ।

हन्तेः कर्मण्याशीर्गत्योः ॥ ६३७ ॥ कर्मण्युपपदे आशिषि गतौ च वर्तमानाद्धन्तेर्डो भवति । शत्रु वध्यात् शत्रुह । क्रोश हन्तीति क्रोशह ।

अपात्क्लेशतमसोः ॥ ६३८ ॥ क्लेशतमसोरुपपदयोरपहन्तेर्डो भवति क्लेशापह । तमोपह । दुःखापह । ज्वरापह । विषापह । अन्यतोऽपि अन्यापह । दर्पापह ।

कुमारशीर्षयोर्णिन् ॥ ६३९ ॥ कुमारशीर्षयोरुपपदयो हन्तेर्णिन भवति । कुमारघाती । शीर्षघाती ।

टग्लक्षणे जायापत्योः ॥ ६४० ॥ जायापत्योरुपपदयोर्हन्तेष्टग भवति लक्षणवत्कर्तरि । जायाघ्न ब्राह्मण । पतिघ्नी वृषली ।

अमनुष्यकर्तृकेऽपि च ॥ ६४१ ॥ अमनुष्यकर्तृकेऽपि च वर्तमानात् हन्तेरपि टग्भवति । जायाघ्न तिलक । पतिघ्नी पाणिरेखा । पित्तघ्न घृतम । वातघ्न तैल । श्लेष्माण हन्तीति श्लेष्मघ्न त्रिकटुकं । अपि शब्दात् कृतघ्न ।

हस्तिबाहुकपाटेषु शक्तौ ॥ ६४२ ॥ एषूपपदेषु हन्तेष्टग्भवति शक्तौ । हस्तिन हन्तीति हस्तिघ्न । बाहुघ्न । कपाटघ्न ।

पाणिघताडघा शिल्पिनि ॥ ६४३ ॥ एतौ शिल्प निपात्येते । पाणिना हन्तीति पाणिघ । ताडघ ।

नग्नपलितप्रियान्धस्थूलसुभगाढ्येष्वभूततद्भावे कृञः ख्युट् करणे ॥ ६४४ ॥ नग्नादिषूपपदेषु अभूततद्भावार्थे कृञ ख्युट भवति करणे। अनग्नो नग्न क्रियते अनेन नग्नकरण द्यूत । एव पलितकरण तैल । प्रियकरण शील । अन्धकरण शोक । स्थूलकरण दधि । सुभगाकरण रूपं । आढ्यकरण वित्त ।

भुवः खिष्णुखुकञौ कर्तरि ॥ ६४५ ॥ नग्नादिषूपपदेषु अभूत-

**भयार्त्तिमेघेषु कृञः** ॥ ६२९ । एषूपपदेषु कृञ खो भवति। भयङ्कर । ऋतिकर । मेघकर ।

**क्षेमप्रियमद्रेष्वण्च** ॥ ६३० ॥ एषूपपदेषु कृञ खो भवति अण्च । क्षेमकर क्षेमकार प्रियकर प्रियकार । मद्रकर मद्रकार ।

**नाम्नि तृभृवृजिधारितपिदमिसहां सज्ञायाम्** ॥६३१ ॥ नाम्नु पपदे एभ्य सज्ञाया खो भवति रथेन तरतीति रथन्तर साम विश्व बिभ र्तीति विश्वभर भू । पतिं वृणीते पतिवरा कन्या । धन जयतीति धनञ्जय वसु धारयतीति वसुन्धरा । शत्रु न पयतीति शत्रुतप । अरिं दमयतीति अ रिन्दम । शत्रु सहत इति शत्रुसह ।

**गमश्च** ॥ ६३२ ॥ नाम्नि उपपदे गमश्च खो भवति सज्ञाया। सुत गम हृदयङ्गमा वाच ।

**उरोविहायसोरुरविहौ च** । ६३३ । उरोविहायसोरुरविहौ भव त गमश्च खो भवति सज्ञाया । उरसा गच्छतीति उरङ्गम । विहायसा गच्छतीति विहङ्गम ।

**डोऽसज्ञायामपि** ॥ ६३४ ॥ नाम्नि उपपदे गमेर्डो भवत्यसज्ञा यामपि । भुजाभ्या गच्छतीति भुजग दुग । प्लवग । पन्नग । अन्त ग । दूरग । पारग । पतग । नग । दुर्ग । नग । अग । उरग । विहग ।

**विहङ्गतुरङ्गभुजङ्गाश्च** ॥ ६३५ ॥ एते डान्ता निपात्यन्ते सज्ञाया। विहङ्ग । तुरङ्ग । भुजङ्ग ।

**अन्यतोऽपि च** ॥ ६३६ ॥ नाम्नि उपपदे गमेरन्यस्मादपि डो भवति । दारि दारतीति दारद हन । गिरौ शेत गिरिश । वराहान्हन्तीति वराह । परिखन्यत परिखा ।

हन्तेः कर्मण्याशीर्गत्योः ॥ ६३७ ॥ कर्मण्युपपदे आशिषि गतौ च वर्तमानाद्धन्तेर्डो भवति। शत्रुं वध्यात् शत्रुहः । क्रोशं हन्तीति क्रोशहः ।

अपात्क्लेशतमसोः ॥ ६३८ ॥ क्लेशतमसोरुपपदयोरपहन्तेर्डो भवति क्लेशापहः । तमोपहः । दुःखापहः । ज्वरापहः । विषापहः । अन्यतोऽपि अन्यापहः । दर्पापहः ।

कुमारशीर्षयोर्णिन् ॥ ६३९ ॥ कुमारशीर्षयोरुपपदयोः हन्तेर्णिन् भवति । कुमारघाती । शीर्षघाती ।

टग्लक्षणे जायापत्योः ॥ ६४० ॥ जायापत्योरुपपदयोर्हन्तेष्टग भवति लक्षणवत्कर्त्तरि । जायाघ्नः ब्राह्मणः । पतिघ्नी वृषली ।

अमनुष्यकर्तृकेऽपि च ॥ ६४१ ॥ अमनुष्यकर्तृकेऽपि च वर्त्तमानात् हन्तेरपि टग्भवति । जायाघ्नः तिलकः । पतिघ्नी पाणिरेखा । पित्तघ्नं घृतम् । वातघ्नं तैलं । श्लेष्माणं हन्तीति श्लेष्मघ्नं त्रिकटुकं । अपि शब्दात् कृतघ्नः ।

हस्तिबाहुकपाटेषु शक्तौ ॥ ६४२ ॥ एषूपपदेषु हन्तेष्टग्भवति शक्तौ । हस्तिनं हन्तीति हस्तिघ्नः । बाहुघ्नः । कपाटघ्नः ।

पाणिघताडघौ शिल्पिनि ॥ ६४३ ॥ एतौ शिल्पिनि निपात्येते । पाणिना हन्तीति पाणिघः । ताडघः ।

नग्नपलितप्रियान्धस्थूलसुभगाढ्येष्वभूततद्भावे कृञः ख्युट् करणे ॥ ६४४ ॥ नग्नादिषूपपदेषु अभूततद्भावे कृञः ख्युट् भवति करणे। अनग्नो नग्नः क्रियते अनेन नग्नंकरणं द्यूतं । एवं पलितंकरणं तैलं । प्रियंकरणं शीलं । अन्धंकरणं शोकः । स्थूलंकरणं दधि । सुभगंकरणं रूपं । आढ्यंकरणं वित्तं ।

भुवः खिष्णुखुकञौ कर्त्तरि ॥ ६४५ ॥ नग्नादिषूपपदेषु अभूत-

तद्भावे भुव खिष्णुखुकञौ भवत कर्त्तरि। अनग्नो नग्नो भवति नग्न भविष्णु। नग्नभावुक। पलितभविष्णु। पलितभावुक। प्रियभविष्णु। प्रियंभावुक। अन्धभविष्णु अन्धभावुक। स्थूलभविष्णु स्थूलभावुक।

**कर्मणि भजो विण्॥ ६४६॥** कर्मणि भजो विण भवति। वेर्लोपेऽपृक्तस्य इति वेर्लोपो भवति॥ अर्द्धभाक्। पादभाक्।

**सहः छन्दसि॥ ६४७॥** छन्दसि भाषाया सहो विण् भवति। तुरासहते

**सहेष्षो ढः॥ ६४८॥** सहेस्सकारस्य षत्व भवति हकारस्य ढकारो भवति चेत्। तुराषाड तुरासाहौ तुरासाड।

**वहश्च॥ ६४९॥** नाम्नि उपपद वहश्च विण् भवति। प्रष्ठवाट प्रष्ठौही।

**अनसि डश्च॥ ६५०॥** अनस्युपपदे वहश्च विण भवति। अन सश्च डो भवति। अनड्वान्। अनडुही।

**दुहः को घश्च॥ ६५१॥** दुह को भवति धन्तस्य घादेश। ब्रह्मदुघा। कामदुघा।

**विट् कमिगमिखनिसनिजनाम्॥ ६५२॥** नाम्नि एभ्यो विट भवति।

**विड्वनोरा:॥ ६५३॥** विटि च वनि च प्रत्यये पर पञ्चमान्त स्याकारो भवति। उदधिक्रा। अग्रेगा। विसखा। गोषा। अब्जजा।

**आतो मन क्वनिप्वनिप्विच॥ ६५४॥** आकारान्ताद्धातोर्मन क्वनिप् वनिप विच् एते प्रत्यया भवन्ति। मन् सुष्ठु ददातीति सुदामा। अश्व इव तिष्ठतीति अश्वत्थामा। क्वनिप। सुधीव। सुधीवा। वनिप्। भूरिदावा। घृतपावा। विच। कीलालपा। सर्वापहारी प्रत्ययलोप।

अन्येभ्योऽपि दृश्यन्ते ॥ ६५५ ॥ अन्येभ्योपि धातुभ्य एन प्रत्यया दृश्यन्ते । मन् अनर्मा । क्वनिप्। इण गतो । प्रातरेति प्रातरित्वा। वनिप् यज्वा । विच—त्विष हिंसायां रिट् ।

क्विप् ॥ ६५६ ॥ धातो क्विप दृश्यत । उखाया स्रमत उखास्रत्। पर्णध्वत् ।

व' क्वो ॥ ६५७ ॥ वज सम्प्रसारण दीर्घनापद्यत क्वावत । ऊः ज्वौ ज्वः ।

ध्याप्योः ॥ ६५८ ॥ ध्याप्याः सम्प्रसारण दीर्घनापद्यत क्वौ परे । आधीः । व्याधी' । आपीः । वचनात्सम्प्रसारण सिद्धम्

पञ्चमोपधाया धुटि चागुणे ॥ ६५९ ॥ पञ्चमान्तस्योपधाया. क्वौ धुटि चागुणे प्रत्यये परे दीर्घो भवति ।

मो नो धातोः ॥ ६६० ॥ धातोर्मकारस्य नकारो भवति धुट्यन्त च । प्रशान् । प्रतान् ।

च्छ्वोः शूठौ पञ्चमे च ॥ ६६१ ॥ छकारवकारयोः शू ऊठि– त्येतो भवत क्वौ धुट्यगुणे पञ्चमे च । ल्ल्य विठ ग्तो । विठ गोविट् प्रच्छ ज्ञीप्सायां पथिप्राट । क्वचिद् ह्रस्वस्य दीर्घता । दिव अश्यू । पिर् स्यू । प्रच्छ प्रष्ट पृष्ट्वा । दिवू द्यूत । द्यूत्वा । विच्छ विश्न । ठस्य द्वि पाठ निमित्ताभाव नमित्तिकस्याप्यभाव ।

श्रि-यविमिनिह्वरित्वगमुपधया ॥ ६६२ ॥ एषामुपधया सह वकारस्य ऊठ भवति क्वौ धुट्यगुणे पञ्चमे च । श्रिवु गतिशोषणयो । श्रू । अव रक्ष पालने । अव् ऊ । मव बन्धने मू । ज्वर रोगे ज । त्वर तू ।

राल्लोप्यौ । ६६३ ॥ रेफात्परौ छकारवकारौ लोप्यौ भवत क्वौ धुट्यगुणे पञ्चमे च । मूर्छ मू । धुर्व धू ।

**वहे पञ्चम्या भ्रंशेः ॥ ६६४ ॥** वहे पञ्चम्यन्त उपपदे भ्रशेः क्विप् भवति । भ्रश भ्रंश अध पतने । वहात् भ्रश्यत इति वहभ्रट् ।

**स्पृशोऽनुदके ॥ ६६५ ॥** अनुदके नाम्नि उपपदे स्पृश क्विप् भवति । स्पृश संस्पर्शे । घृतस्पृक् मन्त्रस्पृक् ।

**अदोऽनन्ने ॥ ६६६ ॥** अनन्न उपपदे अद क्विप् भवति । स स्यमत्तीति सस्यात् । तृणात् ।

**क्रव्ये च ॥ ६६७ ॥** क्रव्ये चोपपदे अद क्विप् भवति पक्वेऽर्थे । क्रव्यात् । पुनर्वचनादण् अपक्वेऽपि । क्रव्याद राक्षस ।

**ऋत्विग्दधृक्स्रग्दिगुष्णिगहश्च ॥ ६६८ ॥** एत क्विबन्ता निपात्यन्ते । ऋतौ यजतीति स्वपि वचि इत्यादिना सम्प्रसारण, वमुवर्णे इति वत्व। ऋत्विक् । धृष्णोतीति दधृक् । स्रक् । दिक् । उष्णिक् ।

**सत्सूद्विषद्रुहयुजविदभिदछिदजिनीराजामुपसर्गेऽप्यनुपसर्गेऽपि ॥ ६६९ ॥** एषामुपसर्गेऽप्यनुपसर्गेऽपि नाम्नि अप्यनाम्नि उपपदे क्विप् भवति। उपसीदतीति उपसत् । सत् । सभासत् । सूङ्गादि ऽसू । सू । अण्डसू । द्विष् अप्रीतौ । विद्विट् । द्विट् । मित्रद्विट् । द्रुह जिघांसाया प्रध्रुक् । ध्रुक् । मित्रध्रुक् प्रयुक् गायुक् । प्रयुक् युक् अश्वयुक् । संवित वित् वदवित् । प्रभित् भित् काष्ठभित । प्रच्छिद छित रज्जुच्छित । प्रजित जित अग्निजित् । अवनी नी सेनानी । विराट राट गिरिराट ।

**कर्मण्युपमानेत्यदादौ दृशष्टक्सकौ च ॥ ६७० ॥** कर्मण्युपमाने त्यदादौ उपपदे दृशष्टक्सकौ च भवत । चकारात क्विप्च ।

**आ सर्वनाम्नः ॥ ६७१ ॥** दृग्दृशदृक्षेषु परत सर्वनाम्न आकारो भवति । दृशिर् प्रेक्षणे । तमिव पश्यतीति अथवा स इव दृश्यते इति तादृश । तादृक्ष । तादृक् । यादृश । यादृक् । यादृक्ष । एतादृश । एतादृक्ष । एतादृक् ।

इदमीः ॥ ६७२ । दृगादिषु परत इदमीर्भवति । इदमिव पश्यतीति ईदृश । ईदृक्ष ईदृक् ।

किं कीः ॥ ६७३ ॥ दृगादिषु किं कीर्भवति । किमिव पश्यतीति कीदृश । कीदृक्ष कीदृक ।

अदोमूः ॥ ६७४ ॥ दृगादिषु अदस् अमूर्भवति । अमुमिव पश्य तीति अमूदृश अमूदृक्ष अमूदृक ।

दृग्दृशदृक्षेषु समानस्य सः ॥ ६७५ ॥ दृगादिषु परषु समानस्य सभावो भवति । समानमिव पश्यतीति सदृश । सदृक्ष । सदृक ।

नाम्न्यजातौ णिनिस्ताच्छील्ये ॥ ६७६ ॥ अजातौ नाम्नि उपपदे धातोर्णिनिर्भवति ताच्छील्येर्थे तच्छब्देन धात्वर्थो गृह्यत । उष्ण भोक्तु शीलमस्य उष्णभोजी । धर्ममवभासितु शीलमस्य धर्ममवभास्यत इति एव शील धर्मावभासी । प्रियवादी । प्रियवादिनी ।

कर्तर्युपमाने ॥ ६७७ ॥ कर्तृवाचिनि उपमाने उपपदे धातोर्णिनिर्भवति । उष्ट्र इव क्रोशतीति उष्ट्रक्रोशी । ध्वाक्षरावी । हंसगामिनी ।

व्रताभीक्ष्ण्ययोश्च ॥ ६७८ ॥ व्रताभीक्ष्ण्ययोरर्थयोर्धातोर्णिनिर्भवति । व्रत शास्त्रविहितो नियम । आभीक्ष्ण्य पौन पुन्य । अश्राद्धभोजी । स्थण्डिलशायी । क्षीरपायिण उशीनरा । सौवीरपायिणो वाह्लिका ।

मनः पुनश्चात्र ॥ ६७९ ॥ कर्मण्युपपदे मन्यतेर्णिनिर्भवति उपपदस्य पुंवद्भवति यथासम्भव । पटुमानी । पट्वीमात्मान मन्यत । पटुमानिनी ।

खश्चात्मने ॥ ६८० ॥ कर्मण्युपपद आत्मार्थे मन्यतेर्णिनिर्भवति खश्च प्रत्यय पुनश्च । विदुषीमिव आत्मान मन्यत विद्वन्मानिनी । पटुमिवात्मान मन्यते पटुमन्य ।

करणेऽतीते यजः ॥ ६८१ ॥ करणे उपपदे धातोर्णिन

तीतेऽर्थे । अग्निष्टोमेन इष्टवान् अग्निष्टोमयाजी । वाजपेययाजी ।

**कर्मणि हनः कुत्सायाम् ॥ ६८२ ॥** कर्मण्युपपदे हन्तेर्णिनिर्भवति अतीते काले वर्तमानात् कुत्सायां । पितृघाती । मातुलघाती ।

**क्विप् ब्रह्मभ्रूणवृत्रेषु ॥ ६८३ ॥** ब्रह्मादिषूपपदेष्वतीते हन्ते क्विप् भवति । ब्रह्माणं हन्तिस्म ब्रह्महा । भ्रूणहा । वृत्रहा ।

**कृञः सुपुण्यपापकर्ममन्त्रपदेषु ॥ ६८४ ॥** एतेषूपपदेषु कृञ क्विप् भवति अतीते । सुष्ठु करोतिस्म सुकृत् । पुण्यकृत् । पापकृत् । कर्मकृत् । मन्त्रकृत । पदकृत् ।

**सोमे सुञः ॥ ६८५ ॥** सोमे उपपदे सुञ क्विप् भवति अतीते । सोमं सुनोतिस्म सोमसुत् ।

**चेरग्नौ ॥ ६८६ ॥** अग्नावुपपदे चिनोते क्विप् भवति अतीते । अग्निं चिनोतिस्म अग्निचित् ।

**विक्रिय इन् कुत्सायाम् ॥ ६८७ ॥** विक्रीणातेरतीते कुत्सायां इन् भवति । सोमं विक्रीणीतेस्म सोमविक्रयी । डुक्रीञ् द्रव्यविनिमये ।

**दृशेः क्वनिप् ॥ ६८८ ॥** कर्मण्युपपदे दृशेः क्वनिप् भवति अतीते । मेरुं पश्यतिस्म मेरुदृश्वा ।

**सहराजोर्युधः ॥ ६८९ ॥** सहराजोरुपपदयो युध क्वनिप् भवति अतीते । युध सम्प्रहारे सह युध्यतेस्म सहयुध्वा । राजानं युध्यतेस्म राजयुध्वा ।

**कृञश्च ॥ ६९० ॥** सहराजोरुपपदयो कृञ क्वनिप् भवति अतीते । सहकृत्वा । राजकृत्वा

**सप्तमीपञ्चम्यन्ते जनेर्डः ॥ ६९१ ॥** सप्तम्यन्ते पञ्चम्यन्ते उपपदे जनेर्डो भवति अतीते । जले जातं जलजं । सरसिजं । संस्कारात् जातं संस्कारजं । बुद्धिजं । पङ्के पङ्कजं । गोरजं ।

अन्यत्रापि च ॥ ६९२ ॥ अन्यस्मिन्नप्युपपदे जनेर्डो भवति अ तीत । न जात अज । ब्राह्मणात् जातो द्विज । अभिज । अनुज । अ नुज । पुमांसमनुजात ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ॥
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥१॥
वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ॥
षोडशादौ विकारः स्याद्वर्णनाशः पृषोदरे ॥ २ ॥
वर्णविकारनाशाभ्यां धातोरतिशयेन यः ।
योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ३ ॥

मह्यां रौतीति मयूर । भ्रमन् रातीति भ्रमर । व्यञ्जनान्तस्य यत्सु मोरिति न्यायात् पुमोऽनुशब्दलोप इति सूत्रेण अनुशब्दलोप । संयोगा न्तस्य लोप इति सलोप । पुमनुज । ऽनुज ।

निष्ठा ॥ ६९३ । धातोर्निष्ठाप्रत्ययो भवति अतीत काले ।

क्तक्तवन्तू निष्ठा ॥ ६९४ ॥ क्तक्तवन्तू निष्ठासंज्ञौ भवत ।

नश्व्युवर्णवृता कानुबन्धे ॥ ६९५ ॥ श्व्यवर्णान्तस्य वृङ्वृञ् वर्णान्तस्य च नेड् भवति कानुबन्धेऽसार्वधातुके । श्रित श्रितवान् । युत युतवान् । भूत भूतवान् । वृत वृतवान् ।

रान्निष्ठातो नोऽपूमूर्च्छिमदिख्याध्याभ्य ॥ ६९६ ॥ रकारात्परस्य निष्ठातकारस्य नकारो भवति नतु पूमूर्च्छिमदिख्याध्याभ्य । शॄ हिंसायां । शीर्ण शीर्णवान् । कीर्ण कीर्णवान् । गीर्ण गीर्णवान् । प्रतिषेधे किम् ? पूत पूतवान् । मूर्च्छा मोहसमुच्छ्राययो । मूर्त मूर्तवान् । मत्त । न डीङ्शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदां निष्ठायामिति प्रतिषेध । ख्यात । ध्यानः ।

निष्ठेटीनः ॥ ६९७ ॥ निष्ठायामिटि परे इनो लोपो भवति । चोर्य

तेस्म चोरितः चोरितवान् । कारितः कारितवान्॥ क्षुधिवसोश्चेति वर्त्तते ।

**निष्ठायाञ्च** ॥ ६९८ ॥ क्षुधिवसोर्निष्ठाया वा नेट् भवति ।

**लुभो विमोहने** ॥ ६९९ ॥ विमोहनेऽर्थे लुभो निष्ठाया वा नेट् भवति । क्षुधितः क्षुधितवान् । उषितः उषितवान् । लुभ गार्ध्ये लुभितः लुभितवान् । लुब्धः लुब्धवान् ।

**पूङ्क्लिशोर्वा** ॥ ७०० ॥ पूङः क्लिशश्च निष्ठायामिड् वा भवति । पूतः पूतवान् । पवितः पवितवान् । क्लिश विबाधने । क्लिष्टः क्लिष्टवान् । क्लिशितः क्लिशितवान् ।

**न डीङ्श्वीदनुबन्धवेटामपतिनिष्कुषोः** ॥ ७०१ ॥ डीङ श्वयत्योः दनुबन्धस्य च वेटस्य निष्ठायां नेट् भवति अपतिनिष्कुषोः ।

**ल्वाद्योदनुबन्धाच्च** ॥ ७०२ ॥ ल्वादिभ्य ओदनुबन्धेभ्यश्च परस्य निष्ठातकारस्य नकारो भवति । डीङ् विहायसा गतौ । डीनः डीनवान् । टुओश्वि गतिवृद्ध्योः ।

**तदीर्घमन्त्यम्** ॥ ७०३ ॥ तत्सम्प्रसारणमन्त्यं चेद्दीर्घमापद्यते । शूनः शूनवान् । दीप्तः दीप्तवान् । ओलजी ओलस्जी व्रीडाया । लज्जतेस्म अन्तरङ्गत्वात् चजोः कगौ धुटि चानुबन्धयोरिति जकारस्य गकारः । लग्नः लग्नवान् ।

**धुटि खनिसनिजनाम्** ॥ ७०४ ॥ एषां पञ्चमान्तस्य आकारो भवति धुटि परे । खातः । सातः । जातः । जातवान् । वटः— गुहू संवरणे । हे ढलोपो दीर्घश्चोपधायाः । गूढः गूढवान् ।

**दादस्य च** ॥ ७०५ ॥ दकारागतस्य निष्ठातकारस्य दस्य च नकारो भवति ।

**आदनुबन्धाच्च** ॥ ७०६ ॥ आकारादनुबन्धाद्धातोर्नेड् भवति नि-

ष्ठाया । ञिमिदा स्नेहने । मिन्नः मिन्नवान् । क्लिदू आर्द्रीभावे । क्लिन्नः क्लिन्नवान् ।

आतोऽन्तस्थामयुक्तात् ॥ ७०७ ॥ अन्तस्थासंयुक्तादाकारात्परस्य निष्ठातकारस्य नकारो भवति । ग्लै हर्षक्षये । ग्लानः ग्लानवान् । म्लै गात्रविनामे । म्लानः । श्रा पाके । श्राणः । द्रा कुत्सायां गतौ । विद्राणः विद्राणवान् ।

व्रश्चेः कश्च ॥ ७०८ ॥ व्रश्चेः परस्य निष्ठातकारस्य नकारो भवति कश्चान्तादेशः । व्रश्चू छेदने । सम्प्रसारणे । वृक्णः वृक्णवान् ।

क्षैशुषिपचां मकवाः ॥ ७०९ ॥ एभ्यो निष्ठातकारस्य यथासंख्यं मकवा भवन्ति । क्षै जै षै क्षये । क्षामः क्षामवान् । शुष्कः । पक्व ।

* वनतितनोत्यादिप्रतिषिद्धेटां धुटि पञ्चमोऽन्तः ॥७१०॥ वनतेस्तनोत्यादेः प्रतिषिद्धेटश्च पञ्चमस्य लोपो भवति धुट्यगुणे पञ्चमे च । आकारस्य अद् भवति । वन षण सम्भक्तौ । वत । तत । हत । मत । रत । न्त । गत । गतवान् ।

जपिवमिभ्यामिड् वा ॥ ७११ ॥ जपिवमिभ्यामिड् वा भवति निष्ठायां । जप विमानसे च । जप्त जप्तवान् । जपित जपितवान् । वान्त वान्तवान् वमित वमितवान् ।

श्वादेभ्या श्वसः ॥ ७१२ । श्वादेभ्या परस्य श्वस इड् वा भवति निष्ठायां । विश्वस्त । विश्वसित । विश्वस्तवान् विश्वसितवान् । आश्वस्त आश्वस्तवान् । आश्वसित आश्वसितवान् ।

भावादिकर्मणोर्वा ॥ ७१३ ॥ आदनुबन्धाद्धातोर्भावे आदिक्रियायाञ्च इड् वा भवति निष्ठायां ।

शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदां निष्ठासेट् ॥ ७१४ ॥ शीङ-

दीना निष्ठा सेट् गुणी भवति शयित शयितवान् । पवित पवितवान्, । निधृषा प्रागल्भ्ये । धर्षित धर्षितवान् । प्रस्वेदित प्रस्विन्न । प्रस्वेदित प्रस्विन्न । प्रमेदित । प्रमिन्न । प्रमिन्नवान्

**स्फायः स्फीः ॥ ७१५** स्फाय स्फीरादेशो भवति निष्ठायां स्फायी ओप्यायी वृद्धौ । स्फीत स्फीतवान् ।

**भावादिकर्मणोर्वोदुपधात् ॥ ७१६ ॥** उदुपधाद्धातोर्निष्ठा सेट् गुणी भवति वा भाव आदिक्रियायाञ्च । द्योतितमनेन द्युतितमनेन । प्रद्योतित प्रद्युतित

**यपि चादो जग्धिः ॥ ७१७ ॥** तकारादौ अगुणे यपि च अदेर्जग्धिर्भवति जग्ध अदने स्म निष्ठाक्त ।

**यतिस्यमास्था त्यगुणे ॥७१८॥** एषां तकारादावगुणे प्रत्यये परे इड् भवति । दो अवखण्डने । दितवान् । अवसित । माङ् माने । मित । स्थित स्थितवान् ।

**वा छाशोः ॥ ७१९ ॥** छाशोस्तकारादावगुणे इड वा भवति । छो छेदने । अवच्छित अवच्छात । शो तनूकरणे निशित निशात ।

**दधातेर्हिः ॥ ७२० ॥** दधातेर्हिर्भवति तकारादावगुणे । अभिहित । अभिहितवान् ।

**स्वरान्तादुपसर्गात्तः ॥ ७२१ ॥** स्वरान्तादुपसर्गात्परस्य दासञ्ज्ञकस्य तो भवति तकारादावगुणे । प्रत्त प्रत्तवान् । नित्त नित्तवान ।

**दद्दोऽधः ॥ ७२२ ॥** अधेर्दो दासञ्ज्ञकस्य दद्भवति तकारादावगुणे । दत्त दत्तवान् । दत्त्वा दत्ति । धाव् गतिशुद्ध्योः । च्वो शठौ ।

**अवर्णादूठो वृद्धिः ॥ ७२३ ॥** अवर्णात्परस्य ऊठो वृद्धिर्भवति । धौत ।

आदिकर्मणि क्तः कर्तरि च ॥ ७२४ ॥ आदिक्रियाया कर्तरि च क्तो भवतीति वक्तिनय । प्रकृत कट भवान । प्रकृत कटो भवता । सुप्तो भवान् । प्रसुप्त भवता । प्रारम्भ आदिक्रियायातक ।

गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ७२५॥ गत्यर्थेभ्य अकर्मकेभ्य श्लिषादिभ्यश्च कर्तरि क्त भवति । गता ग्राम भवान् । ग्रामो भवता प्राप्त । ग्राम भवान् प्राप्त । प्राप्ता ग्रामो भवता । ग्लानोऽयं ग्लमनन । प्रासोऽयं प्रासमनन । अकर्मकात् । शयिता भवान शयित भवता । श्लिषादय सोपसर्गा सकर्मका । आश्लिष्टो गुरु भवान । आश्लिष्टो गुरुर्भवता । श्लिष आलिङ्गन । अधिशयित सत्वा भवान् अधिशयिता सत्वा भवता । उपस्थितो गुरु भवान । उपस्थितो गुरुर्भवता । उपासितो गुरु भवान् । उपासितो गुरुर्भवता । वस निवास । अनुषितो गुरु भवान् । अनुषितो गुरुर्भवता । अनुजातो बुध चन्द्रमा अनुजातो बुधश्चन्द्रमसा । आरूढो वृक्ष कपि आरूढो वृक्ष कपिना । जृष् झृष् वयोहानौ । अनुजीर्णो वृषली भवान् । अनुजीर्णा वृषली भवता ।

क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य. ॥ ७२६ ॥ ध्रुवस्य भावो ध्रौव्य प्रत्यवसान भोजन । ध्रौव्यार्थेभ्य गत्यर्थेभ्य प्रत्यवसानार्थेभ्यश्च क्तो भवति अधिकरणे इदमेषामासित । इदमासितमेभि । अत्रासितोऽयं । इदमेषा यात । इद तैर्यात । ग्राम न याता । इदमेषा भुक्त । इद तैर्भुक्त । ओदन त भुक्ता । इदमेषा पीत पयस्तै पीत । पयस्त पीता । पीत पय

ञ्यनुबन्धमतिबुद्धिपूजार्थेभ्य क्त ॥ ७२७ ॥ मतिरिच्छा बुद्धिर्ज्ञान पूजा सत्कार । ञ्यनुबन्धमतिबुद्धिपूजार्थेभ्य क्तो भवति वर्तमानकाले भाव कर्मणि कर्तरि च यथासम्भव । ञिमिदा स्नेहन । मिन्न ।

स्विन्न । क्ष्विण्ण । राज्ञा मत । सतामिष्ट । बुद्धो राज्ञा बुद्ध । राज्ञा ज्ञात । पूज पूजाया । राज्ञा पूजित । सतामर्चित ।

नपुंसके भावे क्तः ॥ ७२८ ॥ भावे क्तो भवति नपुसके । उपासितमत्र । भुजल्पितं । कुमारस्य शयितं । आस उपवेशने । आसितं पुत्रस्य एधितं ।

युट् च ॥ ७२९ ॥ भावे नपुसके युट् च भवति । भवनं । पचनं । यजनं । वसन । देवन । तोदनं । रोदन करणं । मननं । इत्यादि सर्वं स्वगन्तव्यं ।

तच्छीलतद्धर्मतत्साधुकारिष्वा क्वेः ॥ ७३० ॥ आ क्वे कोऽर्थ क्विपमभिव्याप्य इत्यर्थ तच्छीलादिषु कर्तृषु अत पर केचित्प्रत्यया वेदितव्या ।

तृन् ॥ ७३१ ॥ तच्छीलादिषु धातोस्तृन् भवति वदिता जना पवादान् मुखे । मुण्डयितार श्राविष्टायिना । अधीतृ ज्ञानं ।

भ्राज्यलङ्कृञ्भूसहिरुचिवृतिवृधिचरिप्रजनापत्रपेणामिष्णुच् ७३२

एभ्य इष्णुच् भवति तच्छीलादिषु । भ्राजिष्णु । अलङ्करिष्णु । भविष्णु । सहिष्णु । रोचिष्णु । वर्तिष्णु । वर्धिष्णु । चरिष्णु । प्रजनिष्णु । त्रपूष् लज्जाया । अपत्रपिष्णु । इनन्तेभ्य । धारयिष्णु ।

मदिपतिपचामुदि ॥ ७३३ ॥ उदुपपदेभ्य एभ्य इष्णुच् भवति तच्छीलादिषु । उन्मदिष्णु । उत्पतिष्णु । उत्पचिष्णु ।

जिभुवोः ष्णुक् ॥ ७३४ ॥ आभ्यां ष्णुग्भवति तच्छीलादिषु । जिष्णु । भूष्णु ।

रुधिमण्डिचलिशब्दार्थेभ्यो युः ॥ ७३५ ॥ एभ्यो युर्भवति त-

च्छीलादिषु । क्रुध क्रुध रुष रोषे । कोपन । क्रोधन । रोषण । मन्ड भूषायाँ । मण्ड्यर्थात् । मडि भूषाया । मण्डन । भूष अलङ्कारे । भूषण । चल्यर्थात् । चल कम्पने । चलन । टुवेपृ कपि चलने । वेपन कम्पन । शब्दार्थात् । रवण भाषण ।

रुचादेश्च व्यञ्जनादेः ॥ ७३६ ॥ व्यञ्जनादेश्च रुचादेर्गणात् युर्भवति तच्छीलादिषु । रोचन । शोचन । वर्तन । वर्द्धन । दीपन ।

ततो यातेर्वरः ॥ ७३७ ॥ ततश्चक्रीयितान्ताद्यातेर्वरो भवति तच्छीलादिषु । यस्यानिति इति यलोपश्च । यायावर ।

कमिपिसिभामीशस्थाप्रमदां च ॥ ७३८ ॥ एषां वरो भवति तच्छीलादिषु ।

घोपनत्योश्च कृति ॥ ७३९ ॥ घोपनती तौ च कृति नेड भवति कम्वर । पस्वर । भास्वर । ईश्वर । स्थावर । प्रमद्वर ।

सनन्ताशंसिभिक्षामुः ॥ ७४० ॥ सनन्तेभ्य आशंसिभिक्षिभ्य उर्भवति तच्छीलादिषु । बुभूषु । पिपासु । बुभुक्षु । चिकीर्षु । शंस स्तुतौ च । आशंसु । भिक्ष याच्ञायां । भिक्षु ।

उणादयो भूतेऽपि ॥ ७४१ ॥ उणादयः प्रत्यया वर्तमाने भूतेऽपि भवन्ति ।

कृवापाजिमीस्वदिसाध्यशूद्दृसनिजनिचरिचटिभ्य उण् ॥७४२॥ एभ्यो धातुभ्य उण प्रत्ययो भवति । णकार इद्वद्भाव । करोतीति कारु । वा गतिगन्धनयो । वातीति वायु । पायु जायु । मीङ् हिंसायां । मायु । स्वद आस्वादने । स्वादु । साध संसिद्धौ साध्यतीति साधु । अशू व्याप्तौ । अश्नुत इति अश्रु । दृ कि विदारणे । दृणातीति दारु । षणु दाने । सनोतीति सानु । जनिङ् प्रादुर्भावे । जायत इति जानु । चर

गतिभक्षणयो । चरतीति चारु । चट विगतौ । चटतीति चाटु । " म र्नैधातुभ्य अम " मनु ज्ञाने । म गतौ । तिन निशाने । रुजो भङ्गे । मन । स । तेन । रोग ।

भविष्यति गम्यादयः ॥ ७४३ ॥ औणादिका गमीत्येवमादय भविष्यति भवन्ति । भविष्यत्कालवृत्तिभ्य गमादिभ्य इनादय स्युरित्यर्थ ।

गमेरिनिणिनो च ॥ ७४४ ॥ गम्लृ गतावित्येतस्माद्धातोरिनिणिनो भवत । ग्रामं गमिष्यतीति ग्रामं गमी ग्रामं गामी ।

भवतेश्च ॥ ७४५ ॥ भू सत्तायामित्येतस्माद्धातोरिनिणिनौ भवत भविष्यत्काले । भविष्यतीति भवी भावी । इत्यादि सर्वमुणादिषु वदित व्यम् ।

तुमतुमौ क्रियायां क्रियार्थायाम् ॥ ७४६ ॥ क्रियायां क्रिया र्थायामुपपदे धातो तुण्तुमौ भवत भाववचनेऽर्थे वर्तमानात् । पाचको व्रजति । पक्तुं व्रजति । पचामीति व्रजतीत्यर्थ । एव दातुं पातुं चरितुं वर्तितुं योद्धुं भक्तुं स्रष्टुं द्रष्टुं स्प्रष्टुं ।

सहिवहोरोदवर्णस्य ॥ ७४७ ॥ सहिवहोरवर्णस्य ओत्व भवति तुटि परे । सोढु । वोढु

शन्तानौ स्यमेर्हेतौ शेषे च ॥ ७४८ ॥ क्रियार्थायां क्रियायामुपपदे भवि ष्यदर्थे वर्तमानाद्धातो स्यमेन सहितौ शन्तानौ भवत शा भवत । करिष्यामीति व्रजति करिष्यन् व्रजति । करिष्यमाणो व्रजति । शेष च करिष्यन्तीति करिष्यन्त करिष्यमाण । वक्ष्यन् वक्ष्यमाण ।

पदरुजविशस्पृशो वा घञ् ॥ ७४९ ॥ एभ्यो घञ् भवति वा । पाद । वेश । रोग । स्पर्श । उच समवाये ओक ।

भावे ॥ ७५० ॥ सर्वस्माद्धातोर्घञ् भवति । पाक । याग ।

योग । त्यज गतौ । त्याग । भोग । भग । पार । भाव । इत्यादि ॥

जन्तीन्धे ॥ ७५१ ॥ इन्धे पञ्चमस्य लोपो भवति भावकरणयो-र्विहित घनि परे । जिन्धी दीप्तौ । इन्धन एध ॥

रञ्जेर्भावकरणयोः ॥ ७५२ ॥ रञ्जेर्भावकरणविहिते घनि परे प- ञ्चमा लोप्यो भवति । रञ्ज रागे । रञ्जन राग ।

उपसर्गात्सुदुर्भ्यां लभेः प्राग् भात् खलघञः ॥ ७५३ ॥ सुदु वर्जितादुपसर्गात्लभेः लभेर्भात् प्राक् नकारागमो भवति खलघञ् परे ।

उपसर्गाणा घञि दलम्भ ॥ ७५४ ॥ उपसर्गाणा दीर्घो भवति लम्भे घनि परे डुलभष् प्राप्तौ । उपलम्भ उपालम्भ । प्रलम्भ प्रालम्भ । असुदुर्भ्यामिति किं । सुलभ दुर्लभ ।

अकर्तरि च कारके संज्ञायाम ॥ ७५५ ॥ कर्तृवर्जित कारके भावे च संज्ञाया घञ् भवति । दायन अस्मा दिति दाय । चीयन्तेऽस्मादिति चाय । एव विघन । अस-क्षेपणे प्रास्यन्ते अस्मादिति । प्रास । आहा र । विहरन्त्यस्मिन्निति वा विहार । भुज्यन इति भोग ।

स्वरवृग्गमिग्रहामल ॥ ७५६ ॥ स्वरान्ताद्वृगमिग्रहिभ्यश्च अल् भवति भव । भूयन भवन वा भव । भवन भय । ज न जय । वरण वर । दरण दर । गमन गम । ग्रहण ग्रह ।

द्रुनुबन्धादथु ॥ ७५७ ॥ द्रुनुबन्धद्धातोरथुर्भवति भाव । टुवपू कम्पि चलन । वेपथु । कम्पथु टुटु उपताप । दवथु । टुवपू । वेपन वपथु । टुणदि समृद्धौ । नन्दथु टुवम उद्गिरण वमथु । टु आश्वि गतिवृद्ध्या । श्वयथु ।

ड्वनुबन्धात्त्रिमक्तेन निर्वृत्त ॥ ७५८ ॥ ड्वनुबन्धद्धातोस्त्रिमम्भवति

तेन धान्यर्थेन निर्वृत्त पाक्न निर्वृत पक्त्रिम। एव करणेन निर्वृत्त कृत्रिम।

याचिविछिप्रछियजिस्वपिरक्षियतां नङ् ॥ ७५९ ॥ एभ्यो नङ् भवति भावे। याच्ञा। छो गत्यां इति छ्न। विश्न। प्रश्न। यज्ञ। स्वप्न। रक्ष्ण। यती प्रयत्ने। प्रयत्न।

उपसर्गे दः किः ॥ ७६० ॥ उपसर्गे उपपदे दासञ्ज्ञकात्किर्भवति भावे। आलोपोऽसार्वधातुके इत्याकारलोप। आदि। आधि। व्याधि। सन्धि:। निधि।

कर्मण्यधिकरणे च। ७६१। कर्मण्युपपदे दासञ्ज्ञकात्किर्भवति अधिकरणे च। वारां धीयन्तेऽस्मिन्निति वारिधि। एव जलधि। वारिधि। अंबुधि। पाथि। अम्भोधि।

कर्मव्यतिहारे णच स्त्रियाम् ॥ ७६२ ॥ क्रियाव्यतिहारे वर्तमानाद्धातो भाव णच् भवति स्त्रिया। तत्र न वृद्ध्यागम किन्तु वृद्धिरादौ सणि इति वृद्धि। क्रियाव्यतिहारे क्रुश आह्वाने रोदने च। पुन पुन व्यवक्रोशन व्यवक्रोश। व्यवक्रोश एव व्यावक्रोशी। हसि विहसने। पुन पुन व्यवहस्यन व्यवहास। व्यवहास एव व्यवहासी।

अभिविधौ भावे इनण् ७६३ ॥ अभिविधिरिति कोऽर्थ। अभिव्याप्ते साकल्येन क्रियासबन्ध इत्यर्थ। अभिविधौ गम्यमाने धातोरिनण भवति भाव स्वार्थे अण् भवति। कुट कौटिल्ये। सकुटन सकोटिन। सकोटिनमेव साकोटिन वर्तते। एव साराविणम्। साहासिन वर्तते।

षानुबन्धभिदादिभ्यस्त्वङ् ॥ ७६४ ॥ षानुबन्धेभ्यो भिदादिभ्य भावे अङ् भवति स्त्रिया। त्रप त्रपायाम्। क्षम सामर्थ्ये। त्रपा। व्यथ दु समयचलनयो। व्यथा। व्यथ ताडने व्यथा। छिदिर् छिदा। गुह

भवरण । गुहा । स्पृह इप्सायां स्पृहा ।

**आतश्चोपसर्गे** ॥ ७६५ ॥ उपपद आकारान्ताद्धातोरङ् भवति स्त्रियां । सन्ध्या । सस्था । उपधा । अन्तर्धा ।

**रोगाख्यायां वुञ्** । ७६६ ॥ रोगाख्यायां धातोर्वुञ् भवति स्त्रियां । प्रवाहिका । प्रच्छर्दिका ।

**संज्ञायां च** ॥ ७६७ ॥ संज्ञायाञ्च धातोर्वुञ् भवति स्त्रियां । भञ्जा आमर्दने । *उद्दालपुष्पाणि भज्यन्ते यस्यां क्रीडायां सा उद्दालपुष्पभञ्जिका ।* एवं शालपुष्पप्रवाहिका ।

**प्रश्नाख्यानयोरिञ्वुञ् च वा** । ७६८ ॥ प्रश्ने आख्याने अवग म्यमाने धातोरिञ् भवति वुञ् भवति । वाग्रहणात् यथाप्राप्तं च । व का कारिमकार्षी का कारिका का क्रिया का कृत्या । अहं सर्वां कारि मकार्षं सर्वां कारिका सर्वां क्रियां सर्वां कृत्यां । एवं त्वं का कारणाम कार्षी । त्वं का पाचिकामपाक्षी । का पक्तिं ।

**नञ्यन्याक्रोशे** ॥ ७६९ ॥ नञ्युपपदे आक्रोशे गम्यमाने धातो रनिर्भवति । अकरणिस्ते वृषल भूयात् । जीव प्राणधारणे । एवमजीवनिः । जन जनने अजननी- अप्राणनी ...।

**युट्** ॥ ७७० ॥ नपुंसके भावे युट् भवति । गमनं । हस हसने । हसनं । शयनं । यजनं ।

**करणाधिकरणयोश्च** ॥ ७७१ ॥ करणेऽधिकरणे च युट् भवति । ओव्रश्च च्छेदने इध्मानि प्रकर्षेण वृश्च्यन्ते अनेन अस्मिन्निति वा इध्मप्रव्रश्चनं । गौः दुह्यते अनयाऽस्यामिति गोदोहनी । सक्तूनि धीयन्ते सक्तुधानी स्थानं । आसनं । यानं । यजनं ।

पुंसि संज्ञायां घः ॥ ७७२ ॥ करणाधिकरणयोश्च पुंसि संज्ञायां घो भवति ।

छादेर्घे स्मन्त्रनक्विप्सु च ॥ ७७३ ॥ छादे ह्रस्वो भवति घ इस् इन त्रन क्विप् एषु परतः । छद षद संवरणे । उर छाद्यते अनेनेति उरश्छद । एवं दन्तच्छद ।

अर्चिशुचिरुचिहुसृपिछादिछर्दिभ्य इस ॥ ७७४ ॥ एभ्य इस् भवति । अर्चि । शोचि । रोचि । हवि । सर्पि । छदि । छर्द वमने । छर्दि ।

सर्वधातुभ्यो मन् ॥ ७७५ ॥ छद्म ।

छदिगमिपदिनीभ्यस्त्रन् ॥ ७७६ ॥ एभ्य धा त्रन् प्रत्ययो भवति । छाद्यते अनेनेति छत्र । क्विप तनुच्छत् । गुर्वनेन अनेनेति क्र । शृण्वन्त्यनेनेति श्रव । लीङ् श्लेषणे । लीयन्ते अस्मिन्निति लय ।

ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल ॥ ७७७ ॥ कृच्छ्रं दुःख दुर्गेऽर्थे । अकृच्छ्र सुगं सोऽर्थ । एषूपपदेषु कृच्छ्राकृच्छ्रार्थेषु खल् भवति भावे कर्मणि कर्त्तरि च । ईषदप्रयासेन क्रियत इति ईषत्कर कटो भवता । दुष्कर । सुकर । ईषद्बोधं कार्यं । दुर्बोधं व्याकरणं । सुबोधं अध्यात्मं ।

कर्तृकर्मणोश्च भूकृञोः ॥ ७७८ ॥ ईषदादिषूपपदेषु आभ्यां कर्तृकर्मणो खल भवति । ईषदाढ्यम् भवन ईषदाढ्यंभवं । भवता दुराढ्यंभव । भवता स्वाढ्यंभव । ईषदाढ्य क्रियते ईषदाढ्यंकरो भवान । दुराढ्यंकर । स्वाढ्यंकर ॥

आद्यो न्यदरिद्रातेः ॥ ७७९ ॥ ईषदादिषूपपदेषु आकारान्तेभ्यो युर्भवति अदरिद्राते ॥ ईषत्पान सोमो भवता । दुष्पान । सुपान । ईषद्दान । दुर्दान । सुदान । ईषद्ग्लाना । दुर्ग्लाना । सुग्लाना ।

अलंखल्वोः प्रतिषेधयोः क्त्वा वा ॥ ७८० ॥ अलं खलु शब्दयोः प्रतिषेधार्थयोरुपपदयोर्धातोः क्त्वा वा भवति। अलंकृत्वा गच्छति। अलंकृत्वा । अलंभुक्त्वा । खलुभुक्त्वा । अलङ्करणेन । खलुकरणेन । अलं भोजनेन । खलुभोजनेन ।

क्त्वामनन्ययमगन्तोऽव्यय ॥ ७८१ ॥ क्त्वान्तम्मन्तं अमन्तं च कृन्मयम् अव्ययानि भवन्ति । अव्ययं चेति विभक्तीनां लुक् ॥

एककर्तृकयोः पूर्वकाले ॥ ७८२ ॥ एककर्तृकयोर्धात्वर्थयोर्मध्ये पूर्वक्रियाकाले वर्तमानाद्धातोः क्त्वा भवति । भुक्त्वा व्रजति । स्नात्वा भुङ्क्ते । गत्वा गृह्णाति ।

गुणी क्त्वा सेटरुदादिक्षुधक्लिशकुषगुधमृडमृदवदवसग्रहः ॥ ७८३ ॥ रुदादिक्षुधादीनां च क्त्वा सेड् गुणी भवति ।

उदनुबन्धपूक्लिशां क्वि ॥ ७८४ ॥ उदनुबन्धात् क्लिशश्च इड् वा भवति क्त्वाप्रत्यये परे । देवनं पूर्वं पश्चात्किंचिदिति देवित्वा द्यूत्वा । वृधु वर्धनं पूर्वं पश्चात्किंचिदिति वर्धित्वा वृद्ध्वा । श्रमु श्रम उपशमने । शमित्वा शान्त्वा । श्रमित्वा । श्रान्त्वा । पवित्वा । पूत्वा । क्लेशित्वा । क्लिष्ट्वा ।

व्यञ्जनादेर्युपधस्यावो वा ॥ ७८५ ॥ इश्च उश्च वी । वी उपधे यस्यासौ व्युपधः । व्यञ्जनादेरिकारोकारोपधस्य व्यञ्जनान्तस्य धातोः क्त्वा सेट् गुणी भवति । द्योतित्वा द्युतित्वा । लेखित्वा लिखित्वा ।

तृषिमृषिकृषिवञ्चिलुञ्च्यृतां च ॥७८६॥ एषां क्त्वा सेट् गुणी भवति वा । ञितृषा पिपासायां । तर्षित्वा तृषित्वा । मृष सहने च । मर्षित्वा मृषित्वा । कृष विलेखने । कर्षित्वा कृषित्वा । वञ्चु प्रलम्भने

भातोर्णम् भवति । चूडक इव नष्ट चूडकनाश नष्ट । गुरुरिव अभवत गुरुभावमभवत् । रत्नमिव निहित रत्ननिधायं निहित ।

निमूलसमूलयो' कष ॥ ८०१ ॥ निमूलसमूलयो कर्मणोरुप यो कषतर्णम् भवति । निमूलकाष कषति निमूल कषतीत्यर्थ । समूलकाष कषति समूल कषतीत्यर्थ । अन्नकाष कषति अन्नकषतीत्यर्थ । ओदनमिव पक्व ओदनपाक पक्व । इत्यादि प्रयोगादनुसर्तव्यम् ।

स्त्रियां क्ति' ॥ ८०२ ॥ धातोर्भावे क्तिर्भवति स्त्रियां । घोषवचो श्च इतीति नेट । भूयत भवन वा भूति । नवन नुति । स्तवन स्तुति । वर्धन वृद्धि । धारण धृति । वर्तन वृत्ति । यजन इष्टि । श्रु विश्रवण श्रवण श्रुति । बुध अवगमने बोधनं बुद्धि । करण कृति भ्रमु अनवस्थाने भ्रमण पञ्चमोपधाया धुटि चागुणे इति उपधाया दीर्घ भ्रान्ति

कृत्वादिभ्योऽपूणाते' क्तः ॥ ८०३ ॥ पूणातिवर्जितादृकारा न्तात्ल्वादिभ्यश्च परस्य क्तेर्नकारो भवति । कृ विक्षेप करण कीर्यन इति वा कीर्णि । गरण गीर्णि ॥ ल्वन लूनि । पूणातेस्तु उराण्चोपधस्य च पूपा लनपूरणयो पूरण पूर्ति । मरण मूर्ति ।

हाज्याग्लाभ्यश्च ॥ ८०४ ॥ एभ्यो धातुभ्यश्च परस्य क्ते नकारा भवति स्त्रियां । ओहाक त्यागे हान हानि । ज्या वयोहानौ ज्यान ज्यानि । ग्लान ग्लानि ।

संपदादिभ्यः [illegible] क्विप् भवति भाव स्त्रियां । पद गतौ सपद [illegible] ५ ॥

समदन समत्

व्रज् गतौ प्रव्रजनं प्रव्रज्या, इज्या ।

**श च ॥ ८०७ ॥** कृञो भावे शो भवति क्यप् क्तिश्च स्त्रियां । क्रियते करणं वा यणाशिषोर्ये इति इकारागमः क्रिया धातोस्तोऽन्त पानुबन्धे कृत्या कृति ।

**शंसिप्रत्ययादः ॥ ८०८ ॥** शंसेः प्रत्ययान्ताद्धातोर्भावे अप्रत्ययो भवति स्त्रियां । शंसु विस्तुतौ प्रशंसनं प्रशस्यते इति वा प्रशंसा । प्रत्ययान्तात् बुभूषणं बुभूष्यते इति वा बुभूषा । वच परिभाषणे विवक्षणं विवक्षा । विधित्सनं विधित्सा । पिपतिषणं पिपतिषा । पिपासनं पिपासा । वोभूयनं वोभूया । कण्डूञ् गात्रविकर्षणे । स्वार्थे यण् । कण्ड्वादेर्यण् कण्डूयनं कण्डूया ।

**गुरोश्च निष्ठायां सेटः ॥ ८०९ ॥** निष्ठायां सेटः गुरुमतो धातोरप्रत्ययो भवति स्त्रियां । ईह चेष्टायां ईहनं ईह्यते इति वा ईहा । ईक्ष दर्शने ईक्षणं ईक्षा । एवं सर्वमवगन्तव्यम् ।

भावसेनत्रिविद्येन वादिपर्वतवज्रिणा ॥
कृतायां रूपमालायां कृदन्तः पर्यपूर्यत ॥ १ ॥
मन्दबुद्धिप्रबोधार्थं भावसेनमुनीश्वरः ॥
कातन्त्ररूपमालाख्यां वृत्तिं व्यरचयत्सुधीः ॥ २ ॥
क्षीणेऽनुग्रहकारिता समजने सौजन्यमात्माधिके
सन्मानं नुतभावसेनमुनिपे त्रैविद्यदेवे मयि ॥ ३ ॥
सिद्धान्तोऽयमथापि यः स्वधिषणागर्वोद्धतः केवलम्
संस्पर्धेत तदीयगर्वकुहरे वज्रायते मद्वचः ॥ ४ ॥

---

रूपमाला प्रक्रिया समाप्ता ।

यपि च ॥ ७९३ ॥ वननितनोत्यादिप्रतिषिद्धेटां पञ्चमो लोप्यो भवति आत्तश्च अद्भवति, यथासम्भवं धुट्गुणे यपि च परे। प्रवत्य प्रतत्य प्रमत्य प्रहत्य।

वा मः ॥ ७९४ ॥ प्रतिषिद्धेटां मकारो लोप्यो भवति वा यपि च परे। प्रणत्य प्रणम्य आगत्य आगम्य।

ये वा ॥ ७९५ ॥ खनि वनि सनि जनामन्तस्य आकारो भवति यकारे वा। खन खनने। प्रखाय प्रखन्य। प्रवाय प्रवन्य। षणु दाने। प्रसाय। प्रसन्य। जनी प्रादुर्भावे। प्रजाय प्रजन्य।

लघुपूर्वो यपि ॥ ७९६ ॥ लघुपूर्व इन अय् भवति यपि च परे। प्रशमय्य प्रगमय्य। गण संख्याने विगणय्य।

णम् चाभीक्ष्ण्ये द्विश्च पदं ॥ ७९७ ॥ एककर्तृकयोः पूर्वकाले वर्त्तमानाद्धातोर्णम् क्त्वा च आभीक्ष्ण्ये पदं च द्विर्भवति। भोजं भोजं व्रजति। भुक्त्वा भुक्त्वा व्रजति। पाचं पाचं भुङ्क्ते। पक्त्वा पक्त्वा भुङ्क्ते। दायं दायं तुष्यति। दत्वा दत्वा तुष्यति। पायं पायं तृप्यति। पीत्वा पीत्वा तृप्यति।

कर्मण्याक्रोशे कृञः खमिञ् ॥ ७९८ ॥ कर्मण्युपपदे कृञ खमिञ् भवति आक्रोशे गम्यमाने। चौरंकारमाक्रोशति। अंधंकारं निरीक्ष्यते। बधिरंकारं शृणोति। पङ्गुंकारं गच्छति।

यावति विन्दजीवोः ॥ ७९९ ॥ यावदित्यनिर्दिष्टवाची यावदित्युपपदे विन्दतेर्जीवतेश्च णम् भवति। यावद्वेदं भुङ्क्ते। यावन्तं लभते तावन्तं भुङ्क्ते इत्यर्थः। यावज्जीवमधीते, यावन्तं जीवति तावन्तं अधीते इत्यर्थः।

कर्म्मणि चोपमाने ॥ ८०० ॥ उपमाने कर्त्तरि कर्म्मणि चोपपदे

वञ्चित्वा । लुञ्चु अपनयने । लुञ्चित्वा । ऋत इति मौत्रो धातु । ऋर्तित्वा ऋतित्वा ।

**थफान्तानां चानुषङ्गिणा** ॥७८७॥ थन्तानां फन्तानां चानुषङ्गिणा क्त्वा सेट् गुणीभवति वा । ग्रन्थ ग्रन्थ सन्दर्भे । ग्रन्थित्वा ग्रन्थित्वा । ग्रथित्वा ग्रथित्वा । गुफ गुम्फ दृभी ग्रन्थे । गुम्फित्वा । गुफित्वा ।

**जान्तनशामनिटा** ॥ ७८८ ॥ जान्तनशामनिटा चानुषङ्गिणा क्त्वा गुणीभवति वा । मस्ज मज्जे । मक्त्वा मक्त्वा । रञ्ज रागे । रक्त्वा । रंक्त्वा । भञ्जो आमर्दने । भंक्त्वा भक्त्वा । ष्वञ्ज परिष्वङ्गे । स्वक्त्वा स्वक्त्वा ।

**मस्जिनशोर्धुटि** ॥ ७८९ ॥ मस्जिनशो स्वरात्परो नकारागमो भवति धुटि परे । टुमस्जो शुद्धौ । मंक्त्वा मक्त्वा । णश अदर्शने । नंष्ट्वा नष्ट्वा । रुदादिभ्यश्च इड वा भवति । नशित्वा ।

**इज्जहातेः क्त्वि** ॥ ७९० ॥ जहातेरिद् भवति क्त्वा प्रत्यये । हित्वा ।

**समासे भाविन्यनञः क्त्वो यप्** ॥ ७९१ ॥ अनञ क्त्वान्तेन समासे भाविनि क्त्वाप्रत्ययस्य यपादेशो भवति अभिभूय । अभिभवनं पूर्वं पश्चात्किंचिदिति । अभिभूय स्थितः । विजित्य प्रस्तुत्य । अधीत्य । उपेत्य ।

**मीनात्यादिदादीनामाः** ॥ ७९२ ॥ मीनातिमिनोतिदीङां दा मागायति पिबति स्यास्यति जहातीनामाकारो भवति यपि परे । मीङ् हिंसायां प्रमाय । डुमिञ् प्रक्षेपणे । परिमाय दीङ् क्षये । दीङ् अनादरे । प्रदाय । दामादि नामा बाधनार्थं । आदाय । निमाय । प्रगाय । प्रपाय । प्रस्थाय अवसाय । विहाय ।

**यपि च** ॥ ७९३ ॥ वननितनोत्यादिप्रतिषिद्धेटां पञ्चमो लोप्यो भवति आतश्च अद्भवति, यथासम्भवं गुणवृगुणे यपि च परे। प्रवत्य प्रतत्य प्रमत्य प्रहत्य ।

**वा मः** ॥ ७९४ ॥ प्रतिषिद्धेटां मकारो लोप्यो भवति वा यपि च परे । प्रणत्य प्रणम्य आगत्य आगम्य ।

**ये वा** ॥ ७९५ ॥ खनि वनि सनि जनामन्तस्य आकारो भवति यकारे वा । खन खनने । प्रखाय प्रखन्य । प्रवाय प्रवन्य । षणु दाने । प्रसाय । प्रसन्य । जनी प्रादुर्भावे । प्रजाय प्रजन्य ।

**लघुपूर्वो यपि** ॥ ७९६ ॥ लघुपूर्व इन् अय् भवति यपि च परे । प्रशमय्य प्रगमय्य । गण् सङ्ख्याने विगणय्य ।

**णम् चाभीक्ष्ण्ये द्विश्च पद** ॥ ७९७ ॥ एककर्तृकयोः पूर्वकाले वर्तमानाद्धातोर्णम् क्त्वा च आभीक्ष्ण्ये पद च द्विर्भवति । भोजं भोजं व्रजति । भुक्त्वा भुक्त्वा व्रजति । पाचं पाचं भुङ्क्ते । पक्त्वा पक्त्वा भुङ्क्ते । दायं दायं तुष्यति । दत्त्वा दत्त्वा तुष्यति । पायं पायं तृप्यति । पीत्वा पीत्वा तृप्यति ।

**कर्मण्याक्रोशे कृञः खमिञ** ॥ ७९८ ॥ कर्मण्युपपदे कृञः खमिञ भवति आक्रोशे गम्यमाने । चौरङ्कारमाक्रोशति । अन्धङ्कारं निरीक्ष्यते । बधिरङ्कारं शृणोति । पङ्गुङ्कारं गच्छति ।

**यावति विन्दजीवोः** ॥ ७९९ ॥ यावदित्यनिर्दिष्टवाची या वदित्युपपदे विन्दतर्जीवतश्च णम् भवति । यावद्वेदं भुङ्क्ते । यावन्तं लभते तावन्तं भुङ्क्ते इत्यर्थः । यावज्जीवमधीते यावन्तं जीवति तावन्तमधीते इत्यर्थः ।

**कर्म्मणि चोपमाने** ॥ ८०० ॥ उपमाने कर्तरि कर्मणि चोपपदे

तनु गतौ मननं मतया इत्या।

श च ॥ ८०७ ॥ शो मावे शो भवति वपस्य स्त्रियां क्रिया। क्रीयतं करण वा यणादिशेयें इति इकारागम क्रिया धातोम्नोन्त पानुर न्ये चूत्वा इति ।

शंसिप्रत्ययादः ॥ ८०८ ॥ शंसे प्रत्ययान्ताद्धातोर्भावे अप्रत्ययो भवति स्त्रियां। शमु निस्तुतौ प्रशमन प्रशम्यन इति वा प्रशमा। प्रत्ययान्तात् बुभूषणं बुभूष्यत इति वा बुभूषा। वच परिमाषणे विवक्षण विवक्षा। विधित्सन विधित्सा। पिपतिषण पिपतिषा। पिपासन पिपासा। बोभूयन बोभूया। कण्डूञ् गात्रविकर्षणे। स्वार्थे यण्। कण्डूयणं कण्डूयन कण्डूया।

गुरोश्च निष्ठाया सेटः । ८०९ ॥ निष्ठाया सेट गुरुमतो धातो रप्रत्ययो भवति स्त्रियां। ईंट चेष्टायां ईहन इक्षन इति वा ईहा। ईक्ष दर्शने ईक्षण ईक्षा। एव सर्वमवगन्तव्यम्।

भावसेनत्रिविद्येन वादिपर्वतवज्रिणा ॥
कृताया रूपमालाया कृदन्तः पर्यपूर्यत ॥ १ ॥
मन्दबुद्धिप्रबोधार्थं भावसेनमुनीश्वरः ॥
कातन्त्ररूपमालाख्या वृत्तिं व्यरचयत्सुधीः ॥ २ ॥
क्षीणेऽस्तुप्रकाशिता ममजने मौनव्यगात्माधिके
सन्मानं नुतभावसेनमुनिपे त्रैविद्यदेवे मयि ॥ ३ ॥
सिद्धान्तोऽप्यमथापि यः स्वविषयागमोद्धतः केवलम्
संस्पर्द्धेत तदीयगर्वकुहरे वज्रायते मद्वचः ॥ ४ ॥

इति कातन्त्रस्य रूपमाला प्रक्रिया समाप्ता।

धातोर्णम् भवति । चूडक इव नष्ट चूटकनाशं नष्ट । गुरुरिव अभवत् गुरुभावमभवत् । रत्नमिव निहितं रत्ननिधायं निहितं ।

**निमूलसमूलयोः कषः ॥ ८०१ ॥** निमूलसमूल्यो कर्मणोरुपपदयो कषतेर्णम् भवति । निमूलकाषं कषति निमूलं कषतीत्यर्थ । समूलकाषं कषति समूलं कषतीत्यर्थं । अभ्रकाषं कषति अभ्रंकषतीत्यर्थ. । ओदनमिव पक्व ओदनपाकं पक्व । इत्यादि प्रयोगादनुसर्त्तव्यम् ।

**स्त्रियां क्तिः ॥ ८०२ ॥** धातोर्भावे क्तिर्भवति स्त्रियां । घोषवत्योश्च कृतीति नेट । भूयते भवनं वा भूति । नवनं नुति । स्तवनं स्तुति । वर्धनं वृद्धि । धारणं धृति । वर्त्तनं वृत्ति । यजनं इष्टि । श्रु विश्रवणे श्रवणं श्रुति । बुध अवगमने बोधनं बुद्धि । कारण कृतिं भ्रमु अनवस्थाने भ्रमणं. पञ्चमोपधाया धुटि चागुणे इति उपधाया दीर्घ भान्ति

**ऋल्वादिभ्योऽपृणातेः क्तः ॥ ८०३ ॥** पृणातिवर्जिताद्दकारान्ताल्ल्वादिभ्यश्च परस्य क्तेर्नकारो भवति । कॄ विक्षेपे करणं कीर्त्तन इति वा कीर्णि । गरणं गीर्णि ॥ लवनं लनि । पृणातेस्तु उरोष्ठ्योपधस्य च पृ पालनपूरणयो पृरण पूर्ति । मरणं मूर्ति ।

**हाज्याग्लाभ्यश्च ॥ ८०४ ॥** एभ्यो धातुभ्यश्च परस्य क्ते नकारो भवति स्त्रियां । ओहाक त्यागे हान हानि । ज्या वयोहानौ ज्यानं ज्यानि । ग्लानं ग्लानि ।

**संपदादिभ्यः क्विप् ॥ ८०५ ॥** सम्पदादिभ्य क्विप् भवति भावे स्त्रियां । पद गतौ संपद्यते संपदनं वा संपत् । षद्लृ विशरणगत्यवसादनेषु ॥ संसदनं संसत् । परिषदनं परिषत् ।

**व्रजयजोः क्यप् ॥ ८०६ ॥** आभ्यां भावे स्त्रियां क्यप् भवति ।

व्रज् गतौ व्रजन व्रज्या इज्या ।

श च ॥ ८०७ ॥ कृञो भावे शो भवति क्यप् स्त्रियां क्रिया । क्रीयते करण वा यणादिकेऽर्थे इति इकारागम क्रिया धातोर्म्नोन्त पानुन्ये कृत्या कृति ।

शंसिप्रत्ययादः ॥ ८०८ ॥ शसे प्रत्ययान्ताद्धातोर्भावे अप्रत्ययो भवति स्त्रियां । शसु स्तुतौ प्रशसन प्रशस्यते इति वा प्रशसा । प्रत्ययान्तात् बुभुक्षण बुभुक्ष्यते इति वा बुभुक्षा । वच परिभाषणे विवक्षण विवक्षा । विधित्सन विधित्सा । पिपतिषण पिपतिषा । पिपासन पिपासा । बोभूयन बोभूया । कण्डूञ् गात्रविकर्षणे । स्वार्थे यण् । कण्डूयेण् कण्डूयन कण्डूया ।

गुरोश्च निष्ठायां सेट: ॥ ८०९ ॥ निष्ठायां सेट गुरुमतो धातो रप्रत्ययो भवति स्त्रियां । ईह चेष्टायां ईहन ईह्यत इति वा ईहा । ईक्ष दर्शने ईक्षण ईक्षा । एव सर्वमवगन्तव्यम् ।

भावसेनत्रिविद्येन वादिपर्वतवज्रिणा ॥
कृतायां रूपमालायां कृदन्तः पर्यपूर्यत ॥ १ ॥
मन्दबुद्धिप्रबोधार्थं भावसेनमुनीश्वरः ॥
कातन्त्ररूपमालाख्यां वृत्तिं व्यरचयत्सुधीः ॥ २ ॥
क्षीणेऽनुग्रहकारिता समजने सौजन्यमात्माधिके
सम्मानं मुनभावसेनमुनिपे त्रैविद्यदेवे मयि ॥ ३ ॥
सिद्धान्तोऽप्यसमापि यः स्वधिषणागर्वोद्धतः केवलम्
संस्पर्धेत तदीयगर्वकुहरे वज्रायते मद्वचः ॥ ४ ॥

---

इति कातन्त्रस्य रूपमाला प्रक्रिया समाप्ता ।

## अत्र उपयुक्ताः श्लोकाः ।



आख्यातं श्रीमदाद्यार्हत्प्रभोर्जेजीयते भुवि ।
यत्प्रसादाद् व्याकरणं भवेत् मर्त्यार्थसाधकं ॥ १ ॥
अकारादिहसीमानं वर्णाम्नायं वितन्वता ।
ऋषभेणार्हताद्येन स्वनामाख्यातमादितः ॥ २ ॥
तथाहि,
अ एव स्वार्थिकेणाऽका ताद्दग् ऋ ऋषभाभिधा
तदादिर्ह्लावधिः पाठोऽकारादिहसीमकः ॥ ३ ॥
अः स्वरे कश्च पर्येषु रादिर्य स तु हान्वितः ।
अकारादिहसीमाख्ये पाठेऽर्ह मगल पद ॥ ४ ॥
यत्रार्हपदसदर्भाद वर्णाम्नायः प्रतिष्ठितः ।
तस्मै कौमारशब्दानुशासनाय नमोनमः ॥ ५ ॥
ब्राह्म्या कुमार्या प्रथमं सरस्वत्याप्यधिष्ठित ।
अर्हं पद् सस्मरत्या तत् कौमारमधीयते ॥ ६ ॥
कुमार्या अपि भारत्या अङ्गन्यासेप्ययं क्रमः ।
अकारादिहपर्यंतस्ततः कौमारमित्यदः ॥ ७ ॥

